# श्रीसरस्वतीगीतिः

श्री गणेशाय नमः ।
एहि लसत्सितशतदलवासिनि भारति मामकमास्यम् ।
देहि च मे त्वदमरनिकरार्चितपादतले निजदास्यम् ॥ ध्रुवम् ॥ ॥ १॥

जगदघहारिणि मधुरिपुजाये हिमगिरिजित्वरसिततमकाये ।
श्रुतिततिसंस्कृतपदकमलादृतमिह भुवि नान्यदुपास्यम् ।
भारति मामकमास्यम् ॥ २॥

जडतरजीवनमहह मदीयं श्रुतिविरहान्न हि नृषु गणनीयम् ।
निरवधि कृपां कुरुष्व दयामयि व्यपगच्छेन्मम दास्यम् ।
भारति मामकमास्यम् ॥ ३॥

विकसितनीलजलजकुलवासे विहितबृहस्पतिसमनिजदासे ।
जननि कृशोदरि मम रसनोपरि विरचय शाश्वतहास्यम् ।
भारति मामकमास्यम् ॥ ४॥

भवमुखभावितभवदवदानं रचयतु मानसमविरतगानम् ।
निपततु ते मयि दृगयि दयामयि किमपरमात्मजभाष्यम् ।
भारति मामकमास्यम् ॥ ५॥

॥ इति श्रीसरस्वतीगीतिः सम्पूर्णम् ॥